संस्कृत-विद्यापीठ-ग्रन्थमालायाश्चतुस्सप्ततितमं पुष्पम्

# पञ्चलक्षणी


प्रधानसम्पादकः

**प्रो॰ वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो॰ पीयूषकान्तदीक्षितः**





**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली**

# नैवेद्यम्

'प्रमाणं प्राणनिलय:' इति वचनानुरोधेन प्रमाणशब्द: परमेश्वरवाचक इति विदुषामपरोक्षमेव। न्यायशास्त्रन्तावद् वस्तुत: प्रमाणशास्त्रमेवेत्यपि तत्त्वविदामतिरोहितम्। मन्ये न्यायशास्त्रप्रवर्तको महर्षि: गौतमो न्यायतन्त्रसिद्धान् षोडशपदार्थान् प्रथमसूत्रे परिगणयन् प्रमाणतत्त्वमत एव प्रथमं निर्दिशति। प्राय: सर्वाण्येव शास्त्राणि तेषां-तेषां तत्त्वानां प्रतिपादने प्रामुख्येनाधिकृतानीति परम्परया ज्ञायते। यथा व्याकरणशास्त्रं शब्दसाधुत्वं व्यवस्थापयितुं प्रामुख्येन प्रवृत्तम्, मीमांसादर्शनं महर्षिजैमिनिप्रणीतं, वेदार्थनिर्णयपुरस्सरं धर्मस्वरूपनिर्धारणार्थं प्रवर्तितम्, उत्तरमीमांसा ब्रह्मस्वरूपप्रकाशनार्थं प्रवृत्ता, तथैव न्यायशास्त्रमपि प्रत्यक्षानुमानोपमानशब्दभेदेन चतुर्धा प्रथितानां प्रमाणानां लक्षण-स्वरूप-प्रामाण्यादिभि: निरूपणार्थमवतीर्णमिति सुनिश्चितम्।

प्रमाणानि नूनं वस्तुप्रकाशकानि भवन्तीति प्रमाणशास्त्रत्वेन विख्यातमिदन्न्यायशास्त्रं प्रदीपोपममनुमतं परमविदुष: कौटिल्यस्य। अत एवाऽयं स्वरचितस्यार्थशास्त्रस्य विद्योद्देशप्रकरणे न्यायशास्त्रगौरवमेवं वर्णयति-

izrhi% loZfo|kukeqik;% loZdekZ.kke~A
vkJ;% loZèkekZ.kka ls;ekUohf{kdh erkAA bfrA

यथा प्रदीप: परित: स्थितं सम्बद्धं सर्वमेवार्थजातं प्रकाशयति तथैव न्यायशास्त्रमनुपदमन्वीक्षया प्रवर्तमानं यस्मिन् कस्मिन्नपि शास्त्रे स्थानमाविष्करोति चेत् तत्र विद्यमानं शास्त्रीयं तत्त्वं सरहस्यं प्रकाशयत्येव। या चान्वीक्षिकीविद्या सर्वविद्यानां प्रकाशिका साऽऽन्वीक्षिक्यां विद्यमानानान्तत्त्वानां प्रकाशिका तावदाञ्जस्येन स्वत: भवत्येवेति नातिरोहितं सुधियाम्।

न्यायशास्त्रविवेचितस्य प्रमाणस्योपयोग: प्राय: सर्वेषु शास्त्रेषु तावदहमहमिकया तत्तच्छास्त्रमर्मज्ञैर्विहित इति न्यायशास्त्रमाहात्म्यं संसारे सुप्रतिष्ठितमेवेति निर्विवादन्तथ्यम्।

नव्यन्यायप्रवर्तका गङ्गेशोपाध्याया अपि चिन्तामणिनामके महानिबन्धे प्रामाण्यवादप्रकरणे 'अथ जगदेव दु:खपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्या-स्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनि: प्रणिनाय। तत्रादौ प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणादितत्त्वज्ञानान्नि:श्रेयसाधिगम इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते'। इति ग्रन्थेन सर्वेषां प्रमेयादिपदार्थानां मोक्षोपयोगिनां व्यवस्थिति: प्रमाणायत्तैवेति निरूपयन्त: प्रमाणतत्त्वनिरूपणस्य प्राथम्ये औचित्यमेव प्रदर्शयन्ति।

एतावता विवरणेन संक्षिप्य प्रमाणतत्त्ववैभवं किल करतलामलकवत् सुसिद्ध्यति। प्रमाणशिरोमणिभूतं प्रत्यक्षं सर्वतन्त्रानुमतमिति प्रमाणनिरूपणावसरे प्रत्यक्षप्रमाणस्यैव सर्वप्रथमं निरूपणं समुपयुक्तं भवति। सर्वेष्वनुमानादिप्रमाणेषु प्रत्यक्षप्रमाणोपजीवकत्वं तावदत्यन्तं स्फीतमेवेति प्रत्यक्षप्रमाणनिरूपणन्न्यायदर्शने प्रस्तूयते।

यथोद्देश-लक्षण-परीक्षामाध्यमेन शास्त्राणां तत्त्वनिरूपणे प्रवृत्तिर्जायते यथा वा प्रमाणादीनां तात्त्विकेनावबोधेन वस्तु प्रकाश्यते तथैवैतेषां षोडशधा परिगणितानान्तत्त्वानां यथार्थविज्ञानेन परमपुरुषार्थाधिगतिरपि सञ्जायते। उक्तञ्च महर्षिणा गौतमेन प्रथमसूत्रे-

**^^çek.kçes;la'k;ç;kstun`"VkUrfl¼kUrko;ordZfu.kZ;& dkntYir for.MkgsrokHkklPNytkfrfuxzgLFkkukuka rÙoKkukfUu%Js;& lkf/kxe%** bfrA**

'यद्यपि प्रमाणादय: पदार्था:' इत्येवंविधेन वाक्येन, प्रथमसूत्रात्मकेन वाक्येन वा प्रमाणादीनां तत्त्वज्ञानं तु भवत्येव परं प्रमाणत्व-प्रमेयत्वादि-सामान्यधर्मेण प्रमाणादीनां ज्ञानमेव तत्त्वज्ञानत्वेन नात्राऽभिमतम् महर्षे: गौतमस्य, प्रत्युत प्रमाण-प्रमेयादितत्त्वानामुद्देश-लक्षण-परीक्षामुखेन यद्विशिष्य ज्ञानं तदेवात्र वस्तुतस्तत्त्वज्ञानत्वेनाऽनुमतमिति विशेषतो विभावनीयम्।

न्यायदर्शने प्रथमसूत्रे प्रथमं समुद्दिष्टस्य प्रमाणतत्त्वस्य 'प्रत्यक्षानु-मानोपमानशब्दा: प्रमाणानि' इत्येवं चतुर्धा विभजनं विधाय चतुर्धा विभक्तेषु प्रमाणेषु प्रथमोपात्तस्य प्रत्यक्षस्य लक्षणम्-**'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'** इत्येवं न्यायसूत्रे

गौतमः प्रस्तौति। यद्यपि प्रमायाः करणस्वरूपस्य प्रमाणस्य विभागानन्तरं प्रत्यक्ष-प्रमाणस्यैव लक्षणं समुपयुक्तमित्यापाततः प्रतिभाति परं लक्षणतः प्रत्यक्षप्रमाणप्रत्ययं विना प्रत्यक्षप्रमाकरणरूपस्य प्रत्यक्षप्रमालक्षणस्यापि परिज्ञानम् असम्भवीति प्रत्यक्षप्रमाया एव सर्वतः प्रथमं यल्लक्षणं निर्दिष्टं तत् सूपपद्यत इति विज्ञेयम्। लक्षणमहिम्ना ज्ञातायाञ्च प्रत्यक्षप्रमायां प्रत्यक्षप्रमाकरणत्वरूपं प्रत्यक्षप्रमाणलक्षणन्त्वाञ्जस्येन विज्ञातं भवत्येवेति सर्वमवदातम्।

प्रत्यक्षलक्षणं व्याकुर्वन् मुनिः वात्स्यायनः 'इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम्' इत्येवं स्वहृद्यं द्योतयति। अत्रायं प्रश्नः समवतरति यद् यथा प्रत्यक्षं जनयितुं इन्द्रियस्यार्थेन सन्निकर्ष आवश्यकस्तथैवेन्द्रियार्थसन्निकर्षात् पूर्वं तावदात्मनो मनसा संयोगो मनसश्चेन्द्रियेण योगोऽपि नितरामावश्यकः। एवं सति प्रत्यक्षलक्षणे महर्षिणा गौतमेन कथन्नात्म-मनस्संयोगस्य मन इन्द्रियसंयोगस्य च समुल्लेखो प्रत्यक्षजनकत्वेन विहित इति। प्रश्नमिमं समादधता वात्स्यायनेन मुनिना प्रोच्यते यत् प्रत्यक्ष-प्रमालक्षणसूत्रे 'एतावत् प्रत्यक्षे कारणम्' इति गौतमस्य नैव प्रतिपिपादयिषितं प्रत्युत प्रत्यक्ष-प्रमायाः यद्विशिष्टमनितरसाधारणं कारणं तदेव विशेषतो विवक्षितमिति, सूत्रेऽस्मिन् प्रत्यक्षप्रमायाः विशिष्टं यत् कारणं तस्यैव निर्देशात्। एतावता आत्ममनस्संयोगस्य मन इन्द्रियसंयोगस्य च प्रत्यक्ष-प्रमाकारणत्वं तावत् कथमपि प्रतिषिद्धं न भवति।

यथा इन्द्रियस्यार्थेन सन्निकर्षात् केवलं प्रत्यक्ष-प्रमा जन्यते न तथाऽऽत्मनो मनसा संयोगेन केवलं प्रत्यक्षप्रमोपजायते प्रत्युत अनुमितौ, उपमितौ शाब्दे चाप्यात्मनः मनसा योगः कारणं भवतीति सर्वापरोक्षम्।

एवं सति मनस इन्द्रियेण संयोगस्तु प्रत्यक्ष-प्रमाजनने एवोपयुज्यते, अस्य च मन इन्द्रियसंयोगस्याऽनुमित्युपमितिशाब्दप्रमायामनुपयोगात् कथं न प्रत्यक्षलक्षणे समुल्लेखो विहित इति जिज्ञासाऽव्याहतैव तिष्ठति।

जिज्ञासाया अस्याः समाधानं प्रस्तावयता वात्स्यायनेन मन इन्द्रियसंयोगस्य प्रत्यक्षप्रमाऽसाधारणकारणत्वं घ्राणज-रासन-चाक्षुष-त्वाच-श्रावणभेदेन विभिन्नेऽपि प्रत्यक्षे समानरूपेण कारणत्वान्निरस्तम्।

इन्द्रियस्य, अर्थेन गन्ध-रस-रूप-स्पर्श-शब्देन परस्परं भिन्नेन सन्निकर्षस्तु नितरां भिन्न एव फलत इन्द्रियार्थसन्निकर्षरूपस्य प्रत्यक्षप्रमाकारणस्य घ्राणजादिप्रभेदभिन्नेष्वपि प्रत्यक्षेषु समानरूपेण कारणत्वन्नास्तीतीन्द्रियार्थसन्निकर्षस्यैव प्रत्यक्षप्रमाविशिष्टकारणत्वेना-साधारणकारणत्वेन वा प्रत्यक्षसूत्रे समुल्लेखः समुचित इति सुनिश्चीयते।

एवम् 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्' प्रत्यक्षप्रमालक्षणं सूपपन्नं भवति। अत्र प्रत्यक्षप्रमालक्षणे यदि विशेष्यवाचकं ज्ञानपदन्न दीयते चेद् 'इन्द्रियार्थसन्निकर्षोत्पन्नम्' प्रत्यक्षमिति पर्यवसितं प्रत्यक्षलक्षणम् मनो स्वरूपस्येन्द्रियस्याऽत्मस्वरूपेणाऽर्थेन सन्निकर्षे सत्युत्पन्ने सुख-दुःखादावतिव्याप्तं भवति। अस्या अतिव्याप्तेर्निवारणार्थं प्रत्यक्षप्रमालक्षणे ज्ञानपदसन्निवेशोऽनिवार्यः। निविष्टे च ज्ञानपदे, सुख-दुःखादौ 'मन आत्मसन्निकर्षोत्पन्नत्वस्य' सत्त्वेऽपि ज्ञानत्वस्याभावादतिव्याप्तिः सुदूरपराहतेति ध्येयम्।

प्रत्यक्षलक्षणे ज्ञानपदसन्निवेशेन अनुपदमेवोपात्ता सुखदुःखादावति-व्याप्तिः भवतु तावन्निरस्ता परं प्रत्यक्षप्रमाभिन्नस्य सर्वस्यापि ज्ञानस्याऽनुमित्युपमितिशाब्दात्मकस्य, मनो रूपेन्द्रियस्याऽऽत्मस्वरूपार्थेन सन्निकर्षे सत्येव जायमानत्वादिन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वरूपस्य प्रत्यक्षप्रमालक्षणस्याऽनुमित्यादिज्ञानेऽतिव्याप्तिः वज्रलेपायमाना तिष्ठति, किञ्च प्रत्यक्षलक्षणमिदन्नित्ये परमेश्वरप्रत्यक्षेऽव्याप्तमपि भवति परमेश्वरप्रत्यक्ष-स्याजन्यत्वादिति तु नाशङ्कनीयम्, प्रत्यक्षप्रमालक्षणे ज्ञानपदेन साक्षात्करोमीत्यनु-व्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्नस्यैवावबोधात्। एवञ्चानुमित्युपमितिशाब्द-प्रमायामीदृशसाक्षात्त्वजातेरविद्यमानत्वाल्लक्षणसमन्वयाभावान्नातिव्याप्तिः। परमेवं परिष्कृतस्यापि प्रत्यक्षप्रमालक्षणस्याव्याप्तिस्तु परमेश्वरप्रत्यक्षे तदवस्थैव तिष्ठतीति ज्ञेयम्।

ईश्वरप्रत्यक्षे जाताया अव्याप्तेर्निवारणार्थन्तु 'इन्द्रियार्थसन्नि-कर्षोत्पन्नमिति' सावधारणमभ्युपेत्य 'इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्नं ज्ञानं प्रत्यक्षम्' इत्येवं परिष्कृतं प्रत्यक्षप्रमालक्षणमभ्युपगन्तव्यम्। एवं प्रत्यक्षलक्षणपरिष्कारे सतीश्वरप्रत्यक्षस्य केनाप्यनुत्पन्नत्वादिन्द्रियार्थसन्नि-कर्षातिरिक्तानुत्पन्नत्वं ज्ञानत्वञ्च निराबाधमेवेति तत्र लक्षणसमन्वयान्नाति-व्याप्तिः।

एवं परिष्कृतस्यास्य प्रत्यक्षप्रमालक्षणस्याऽनुमित्युपमितिशाब्दप्रमायां समन्वयाभावादतिव्याप्तिरपि पूर्वदर्शिता निरस्ता भवत्यनुमित्यादिप्रमाया-मिन्द्रियार्थसन्निकर्षातिरिक्तेन (मन आत्मसंयोगातिरिक्तेन) परामर्श-सादृश्यज्ञान-पदज्ञानेन समुत्पन्नत्वस्यैव सिद्धत्वेन 'इन्द्रियार्थसन्निकर्षाति-रिक्तानुत्पन्नज्ञानत्वरूपप्रत्यक्ष-प्रमालक्षणस्य समन्वयासम्भवादिति विशेषतोऽवधेयम्। वस्तुत: लक्षणस्यास्यैवं परिष्कृतस्य 'ज्ञानाकरणकं ज्ञानम्' इति प्रसिद्धे प्रत्यक्ष-प्रमालक्षण एव तात्पर्यमुन्नेयम्।

प्रत्यक्षलक्षणेऽस्मिन् 'अव्यपदेश्य'पदं शाब्दे प्रत्यक्षलक्षणाति-व्याप्तिनिवारणार्थमिति ध्येयम्। वात्स्यायनभाष्यानुसारं यावदर्थं वै नामधेयशब्दा:, नामधेयशब्दैश्चार्थसम्प्रत्यय आविद्वदङ्गनागोपालञ्जायते। अर्थाज्जगतीतले यावन्तोऽर्था: पदार्था वा सन्ति तावन्तो नामधेया अपि प्रसिद्धा: सन्त्यथ चैभि: नामधेयात्मकै: शब्दैस्तावदर्थविज्ञानं सर्वेषां भवति। शब्देन चार्थविज्ञाने जाते संसारे व्यवहारोऽपि आञ्जस्येन सिद्ध्यति। वात्स्यायनदिशेन्द्रियस्यार्थेन सन्निकर्षात् समुत्पन्नमर्थज्ञानं 'रूपमिति' 'रस' इत्येवं वा विविच्यते। प्रसिद्धा: रूपरसशब्दाश्चाऽर्थस्य ज्ञानविषयस्य वा नामधेयम्। रूपशब्देन रसशब्देन च 'रूपमिति जानीते' इति ज्ञानस्य 'रस इति जानीते' इत्याकारकज्ञानस्य च व्यपदेशो भवति। रूपरसादिशब्देन व्यपदिश्यमानस्य ज्ञानस्याकार: वात्स्यायनमुनिदिशा 'रूपमिति जानीते' 'रस इति जानीते' इत्याद्याकारक: स्वीक्रियते। अस्य विवरणं 'रूपमिति ज्ञानवान्' 'रस इति ज्ञानवान्' इत्येवं सम्भवति। इदं ज्ञानं व्यपदिश्यमानं सच्छाब्दं प्रसज्यत इत्यस्ति वात्स्यायनस्य समुद्घोष:। यत इदं शाब्दं ज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नेन 'रूपमिति' 'रस इति' वा साक्षात्कारेण सम्बद्धमस्त्यत इदमपीन्द्रियार्थ-सन्निकर्षोत्पन्नज्ञानत्वेन सङ्गृहीतं भवतीति नामधेयव्यपदेश्येऽस्मिन् शाब्दज्ञानेऽतिव्याप्ति: प्रत्यक्षलक्षणस्य सुस्फीतैव, अस्या वारणं लक्षणेऽव्यपदेश्यपदप्रवेशे सारल्येन भवतीति सर्वापरोक्षम्। वात्स्यायनमहर्षि-रथापीन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यमाने ज्ञाने ज्ञानविषयनामधेयै: व्यपदिश्यमाने शाब्दे ज्ञाने विभेदं विवेचयन्निर्दिशति यत् 'अनुपयुक्ते शब्दार्थसम्बन्धे यदिदमर्थज्ञानं 'रूपमिति' 'रस इति' स्वरूपकं तन्नामधेयशब्देन नैव व्यपदिश्यते, स्यान्नाम शब्दार्थयोर्मध्ये विद्यमानो वृत्तिस्वरूप: सम्बन्ध:

कस्यचिद्विज्ञातोऽविज्ञातो वा। यदा चोपयुक्ते शब्दार्थसम्बन्धे 'अस्यार्थस्याऽयं शब्दो नामधेयम्' इति ज्ञानपुरस्सरमर्थः रूपाद्यात्मको गृह्यते तदा यदिदमर्थज्ञानं तच्चक्षुषा जायमानेनार्थज्ञानेन न विशिष्यतेऽनयोरर्थज्ञानयोर्वात्स्यायनदिशा कश्चनाऽन्यः समाख्याशब्दो नास्ति। येन प्रतीयमानो व्यवहारः सिद्ध्येत्, अप्रतीयमानेन च न व्यवहारोऽतस्तस्याज्ञेयस्यार्थस्य वात्स्यायनेन इतिकरणयुक्तेन संज्ञाशब्देन 'रूपमिति ज्ञानं' 'रस इति ज्ञानं' इत्येवं निर्देशः कृतः। एतावताऽर्थज्ञानकाले समाख्याशब्दः न व्याप्रियते, व्यवहारकाले तु व्याप्रियत इति सुसिद्ध्यति वात्स्यायनाकूतम्।

प्रत्यक्षप्रमालक्षणेऽव्यभिचारीति पदोपादानं भ्रमे दोषापाकरणार्थम्। ग्रीष्मर्तौ सूर्यरश्मयो भूमिसम्बद्धेनोष्मणा संसृष्टाः स्पन्दमाना यदा दूरस्थस्य पुरुषस्य चक्षुषा सन्निकृष्यन्ते तदा चक्षुरिन्द्रियस्यार्थेन स्पन्दमानेन रश्मिना सन्निकर्षे सति 'उदकम्' इति भ्रमात्मकं ज्ञानमुत्पद्यतेऽत्र भ्रमात्मके ज्ञाने प्रत्यक्षप्रमालक्षणस्य समन्वयादतिव्याप्तिः स्पष्टैव। यदतस्मिन् तदिति तद्व्यभिचारि ज्ञानम्, अर्थात् तदभाववति तत्प्रकारकं ज्ञानं व्यभिचारि भवति। एवं यज्ज्ञानं तस्मिन् तदिति तदव्यभिचारि भवति, अर्थात् तद्वति तत् प्रकारकं ज्ञानमव्यभिचारि प्रोच्यते। अथ च वात्स्यायनदिशा प्रत्यक्षम-व्यभिचारि ज्ञानमेवानुमतम्।

प्रत्यक्षप्रमालक्षणे 'व्यवसायात्मकत्वम्' न निवेश्यते चेदनवधारणा-त्मकस्य ज्ञानस्य संशयात्मना प्रसिद्धस्य प्रत्यक्षप्रमालक्षणाक्रान्तत्वादतिव्याप्तिः प्रसज्येत यस्या निवारणार्थं प्रत्यक्षप्रमालक्षणे 'व्यवसायात्मके'ति पदं प्रविष्टम्। यदा दूरस्थः कश्चन पुरुषोऽर्थविशेषं पश्यन् 'धूम इति वा' 'रेणुरिति वा' अवधारयितुं क्षमो न भवति तदेन्द्रियस्य अर्थेन सन्निकर्षादनवधारणज्ञानं सिद्ध्यति। इदमनवधारणात्मकं ज्ञानं तावदात्मनः संयोगादेव जायत इन्द्रियार्थसंयोगस्यात्र नास्त्युपादेयतेति तु नाऽभ्युपेयम्। यतो यदा कश्चन पुरुषश्चक्षुषार्थविशेषं पश्यन्नवधारयितुं समर्थो न भवत्येवञ्चेन्द्रियेणो-पलब्धमर्थविशेषं मनसा नोपलभते तदेन्द्रियेणाऽर्थविशेषमनवधारयन् मनसापि नावधारयितुं क्षमो भवति। एतद्यदिन्द्रियेणाऽर्थविशेषानवधारणपूर्वकं मनसार्थविशेषानवधारणं तत् विशेषापेक्षं विमर्शमात्रं संशयो भवति। अयं संशय इन्द्रियार्थसन्निकर्षजन्यस्तु विद्यते परमनवधारणात्मकमिदं ज्ञानं

प्रत्यक्षमिति नाभ्युपगम्यते। सर्वत्र नियमेन प्रत्यक्षविषयो यो भवति तस्य इन्द्रियेण प्रमातुः प्रथमं व्यवसायोऽनन्तरं पुनः मनसा व्यवसायस्य व्यवसायोऽर्थादनुव्यवसायो जायते। एतादृशनियमवशादेव येषां पुरुषाणामिन्द्रियमुपहतं भवति तेषां तेनेन्द्रियेण ज्ञानाभावान्मनसाऽनुव्यवसायोऽपि नानुभवसिद्धः।

न्यायदर्शने मनोऽपीन्द्रियं परमस्य पृथगुपदेशो मनोगतधर्मभेदादभ्युपेयः। भूतेभ्यः समुत्पन्नानि घ्राण-रसन-चक्षुस्त्वक्-श्रोत्राणि बहिरिन्द्रियाणि गन्ध-रस-रूप-स्पर्श-शब्दरूपेषु विषयेषु यथाक्रमं नियतानि भवन्त्यथ चेमानीन्द्रियाण्यपि सगुणानि परं मनस्तु न भौतिकं नापि सगुणमित्यत्र मनसि विशेषः स्मरणीयः। आत्मनः, आत्मनि विद्यमानस्य सुखस्य च मानसं प्रत्यक्षं स्वीक्रियते यद्यपि न्यायदर्शने मनस इन्द्रियत्वं नोक्तं परं तन्त्रान्तरेषु मनस इन्द्रियत्वमभ्युपगतं न्यायदर्शने न प्रतिषिद्धमित्यनुमतमेव भवतीति सिद्धान्तादात्मज्ञानस्य सुखज्ञानस्यापि मनोरूपेन्द्रियस्य आत्मरूपेण सुखस्वरूपेण वाऽर्थेन यः संयोगः सर्वानुभवसिद्धस्तस्मादेव जन्यत्वात् प्रत्यक्षत्वं सूपपद्यत इति सर्वं चतुरस्रं प्रत्यक्षसम्बद्धं विभाति।

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वादुपमानात् प्रागनुमानं तावन्निरूप्यते न्यायशास्त्रमर्मज्ञैरिति विशेषतोऽवधारणीयम्। न्यायशास्त्रस्याऽऽन्वीक्षिकीत्यपरन्नामाप्यनुमानप्रभावादेव प्रसिद्ध्यतीति विदितमेव विपश्चिताम्। तथा च वात्स्यायनो निर्दिशति वात्स्यायनभाष्ये-

'प्रत्यक्षागमाभ्यामीक्षितस्याऽनु पश्चादीक्षणमन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रमिति।'

एतावता प्रत्यक्षप्रमाणेन शब्दप्रमाणेन च यस्य तत्त्वस्य परीक्षणं सुसम्पन्नं भवति पुनः तस्यैव तत्त्वस्य पुष्ट्यर्थं विभिन्नैर्हेतुभिर्यदन्वीक्षण-मनुमानात्मकं विधीयते सैव न्यायनये तावदन्वीक्षा प्रोच्यते, अनयाऽन्वीक्षया च यच्छास्त्रं प्रवर्तते तदेव न्यायशास्त्रमिति भाष्यस्य निर्गलितार्थः सिद्ध्यति। ये तावत्तर्करसिका भवन्ति ते तु प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्त इति प्रसिद्धिरप्यनुमानगतं वैलक्षण्यमेव विद्योतयति।

अनुमानस्यास्य लक्षणं न्यायसूत्रदिशा 'तत्पूर्वकत्वमि'ति स्वीक्रियते। प्रत्यक्षसूत्रमिवानुमाननिरूपणपरे 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्चे'ति सूत्रेऽपि गौतमोऽनुमानलक्षणं तद्विभागञ्च सहैव करोति। कस्यापि तत्त्वस्य लक्षणन्नाम वाचस्पतिमिश्रदिशा व्यतिरेकिहेतुवचनमेव[1] भवति। अत एव लक्षणप्रयोजनं व्यावृत्तिर्व्यवहारो वा मन्यते। अत्र व्यावृत्तिर्नाम स्वेतरभेदानुमितिरित्यभ्युपगम्यते। स्वेतरभेदानुमितौ तावद् वस्तुनो लक्षणमेव हेतुर्भवति।

तत्पूर्वकमनुमानमित्यनुमानलक्षणेन समानासमानजातीयेभ्योऽनुमानं व्यवच्छिद्यते। तत्पूर्वकमित्यत्र त्रिधा विग्रहः सम्भवदुक्तिकः। तानि पूर्वं यस्य तदिदं तत्पूर्वकमिति प्रथमो विग्रहः। ते पूर्वं यस्य तदिदं तत्पूर्वकमिति द्वितीयो विग्रहः। तत्पूर्वं यस्य तदिदं तत्पूर्वकमिति तृतीयो विग्रहः प्रस्तुतेऽस्मिन् सन्दर्भे स्वीकर्त्तुं शक्यः। तानि पूर्वं यस्य तदिदं तत्पूर्वकमिति प्रथमविग्रहाधारेणानुमानस्य सर्वप्रमाणसम्बद्धत्वात् समस्तप्रमाणपूर्वकत्वं सिद्ध्यति, परम्परया सर्वप्रमाणानां प्रत्यक्ष एव व्यवस्थानात् तत्त्वतः प्रत्यक्षपूर्वकत्वमेवानुमाने प्रसिद्ध्यतीति ध्येयम्। ते द्वे प्रत्यक्षे, पूर्वे यस्य तदिदं तत्पूर्वकमिति द्वितीयविग्रहानुसारमनुमानस्य प्रत्यक्षात्मकस्य प्रत्यक्षद्वयपूर्वकत्वं निर्धार्यते। प्रत्यक्षात्मकपरामर्शरूपानुमानस्य पूर्वं कतरे द्वे प्रत्यक्ष इति जिज्ञासायाम् महानसादौ लिङ्गलिङ्गिसम्बन्धदर्शनन्तावदाद्यं प्रत्यक्षम्, द्वितीयञ्च पर्वतादौ धूमादिलिङ्गदर्शनात्मकं प्रत्यक्षम्। अनन्तरं जिज्ञासोः पुरुषस्य द्वितीयाल्लिङ्गप्रत्यक्षात् संस्कारोद्बोधे सति लिङ्गलिङ्गि-सम्बन्धस्वरूपायाः व्याप्तेः स्मरणं जायते, स्मरणसमनन्तरञ्च लिङ्गलिङ्गिसम्बन्धरूपव्याप्तिविशिष्टस्य धूमादेर्लिङ्गस्य पुनः पर्वते परामर्शापरपर्यायं प्रत्यक्षमुपजायते। एतदेव चरमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां

1. अर्थस्य प्रयोजनस्य साक्षात् शास्त्रकार्यस्य तत्त्वज्ञानलक्षणस्य त्रिविधयैव शास्त्रप्रवृत्या भावात्। तथा हि, **लक्षणं नाम व्यतिरेकिहेतुवचनम्**। तद्धि समानासमानजातीयेभ्यो व्यवच्छिद्य लक्ष्यं व्यवस्थापयति। न चास्य धर्मिदर्शनमन्तरेण पक्षधर्मता सिद्ध्यतीति तदुपदर्शनाय नामधेयमात्रेण धर्मिणामुद्देशः। यद्यपि प्रतिक्षणमुद्दिष्टा एव धर्मिणः, तथापि शास्त्राभिसम्बन्धपरादपि वाक्यात् समधिगम्यन्त इत्युद्देशोऽप्युक्तः। न चापरीक्षितो हेतुर्व्यतिरेकी चतूरूपो भवतीति परीक्षाप्यवश्यं कर्त्तव्या। तस्मात् तत्त्वज्ञानस्यार्थस्य तथाभावात् त्रैविध्यमिति। न्या0भा0वा0टी0 1.1.3 पृ0 186

स्मरणेन चानुगृहीतं लिङ्गपरामर्शरूपानुमानं तृतीयलिङ्गपरामर्शो वा भवतीति न्यायतात्पर्यविदामाकूतम्।

अयं व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानात्मकस्तृतीयो लिङ्गपरामर्श एवानुमानम्, कथं लिङ्गलिङ्गिसम्बन्धस्मृतिस्वरूपं व्याप्तिज्ञानं नानुमानमिति प्रश्नो मनसि सहजतयावतरति। यद्यप्यत्र केचन विद्वांसो लिङ्गलिङ्गि-सम्बन्धस्मृतिस्वरूपं व्याप्तिज्ञानं लिङ्गलिङ्गिसम्बन्धदर्शनादिभिरनुगृह्यमाण-मनुमानमिति मन्वते परं व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानात्मकस्य तृतीयस्य लिङ्गपरामर्शस्यैवानुमानत्वं न्याय्यं तृतीयलिङ्गपरामर्शानन्तरमेवाऽनुमि-तेरनुमानकार्यभूतायाः सञ्जायमानत्वादिति विशेषतोऽवधेयम्।

एतावता न्यायदर्शनानुसारं तत्पूर्वकमर्थात् प्रत्यक्षपूर्वकमनुमानमिति निर्णीतं भवति। परं प्रत्यक्षपूर्वकत्वमिति तावदनुमानलक्षणं स्मृतिहेतुभूते भावनाख्ये संस्कारेऽतिव्याप्तं संस्कारस्यास्य पूर्वमपि नियमेन प्रत्यक्ष-स्याक्षुण्णत्वादिति तु नैवाशङ्कनीयम् पूर्वं प्रस्तुतादिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम् इत्यादिप्रत्यक्षसूत्रात् ज्ञानस्याधिकारात् तत्पूर्वकम् ज्ञानमनुमानमि-त्यनुमानलक्षणस्वीकारेण संस्कारस्य प्रत्यक्षजन्यत्वेऽपि ज्ञानत्वाभावादतिव्याप्तेः सुदूरपराहतत्वात्।

वस्तुतो व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं तृतीयलिङ्गपरामर्श-रूपमनुमानं सर्वजनसाधारणीमनुमितिञ्जनयति व्याप्तिज्ञानजन्यञ्च भवति फलतो व्याप्तिज्ञानस्यानुमानजनने अनुमितिसमुत्पादने चानितरसाधारणं महत्त्वमाविद्वदङ्गनागोपालं सुविदितमेव, किं बहुनाऽनुमानाटवीं प्रविश्यानुमितिरूपं सुफलमधिगन्तुं व्याप्तिज्ञानं तावत्सुन्दरं द्वारमस्तीति ध्येयम्। सुन्दरस्यास्य द्वारभूतस्य व्याप्तिज्ञानस्याधिगतिस्तु प्रस्तुतेन पञ्चलक्षणीनामकेन ग्रन्थरत्नेनाऽञ्जसा भवत्येवेति विज्ञेयम्।

आचार्यश्रीगङ्गेशोपाध्यायरचितस्तत्त्वचिन्तामणिनामको महानिबन्धः प्रत्यक्षानुमानोपमानखण्डेषु चतुर्धा विभक्तोऽस्ति। महानिबन्धस्यास्यानुमान-खण्डान्तर्गतं व्याप्तिपञ्चकप्रकरणमेव पञ्चलक्षणीनाम्नापि तार्किकनिवहे नितरां प्रसिद्धमस्ति। न केवलं नैयायिकाः प्रत्युत वैयाकरणाः, वेदान्तिनः, मीमांसकाः किं बहुना साहित्यिका अपि व्युत्पित्सवः पञ्चलक्षणीनामकस्यास्य

ग्रन्थस्याध्ययनाध्यापनेऽहमहमिकया प्रवर्त्तमाना दृश्यन्ते। एतावता पञ्चलक्षणी-नाम्नो ग्रन्थस्य कियती लोकप्रियतेत्याञ्जस्येनावबोद्धुं शक्यते। चिन्तामणि-ग्रन्थस्यानुमानखण्डान्तर्भूताया: पञ्चलक्षण्या: व्याप्तिपञ्चकप्रकरणरूपेणापि प्रथिताया यद्यपि श्रीरघुनाथशिरोमणिरचिता दीधितिव्याख्या श्रीमथुरानाथ-तर्कवागीशविरचिता माथुरीव्याख्या च प्रसिद्धा विद्यते परमनयोर्व्याख्ययो: सारल्येन व्याप्तिरहस्यमवबोधयितुं यथा रहस्यापरनामधेया माथुरीव्याख्या सामर्थ्यमावहति न तथा दीधितिनाम्ना ख्याता श्रीरघुनाथकविविरचिता व्याख्येति विदुषामाकूतम् । मन्ये अत एव श्रीरघुनाथशिरोमणिरचिताया: पञ्चलक्षणी-व्याख्याया निगूढं रहस्यमवबोधयितुं श्रीजगदीशगदाधरभट्टाचार्यप्रभृतयो विद्वांसो व्याख्यानार्थं प्रवृत्ता:। मन्य एतदेव प्रमुखं कारणं यद्भारते विभिन्नेषु विश्वविद्यालयेष्वनुमानोपयोगि व्याप्तिरहस्यं प्रकाशयितुं विद्यार्थिनां कृते माथुरीव्याख्यासम्वलिता पञ्चलक्षणी एव पाठ्यग्रन्थरूपेण निर्धारिता विद्यते। माथुरीव्याख्यासमेताया: पञ्चलक्षण्या अपि पारम्परिकपद्धत्या निबद्धानि गङ्गानिर्झरिणीप्रभृतीनि नैकानि व्याख्यानानि सुलभानि परमिमानि व्याख्यानानि साम्प्रतमभिनवोत्साहसम्पन्नानामध्यापकानामपि दुरवबोधानि सन्ति, छात्राणामेभिर्व्याख्यानै: समुपकारस्तु कल्पनातीतमिवाभाति।

यद्यपि श्रीमथुरानाथरचिताया: पञ्चलक्षण्या बहुपूर्वममेरिकावास्तव्येन प्रो0 डेनियल हेनरी इन्गाल्स महोदयेन 'MATERIALS FOR THE STUDY OF NAVYANYAYA LOGIC' नामके ग्रन्थे कृतमाङ्ग्ल-भाषाव्याख्यानं राराजते यत्र प्रो0 इन्गाल्समहोदयेन मुक्तकण्ठेन स्वीकृतं यत् ''बहुषु विषयेषु नव्यन्याय: अरस्तुकृततर्कशास्त्रमपेक्ष्य प्रकृष्टतमं विद्यत''[1] इति, परमत्रापि संस्कृतच्छात्राणाम् आङ्लभाषायां सहजाया: गतेरभावादभिरुचिर्नैवोदेति। फलतोऽधुनातनानां संस्कृतविद्यार्थिनां राष्ट्रभाषया पञ्चलक्षणीं विज्ञातुं समुत्सुकानां हितबुद्ध्या राष्ट्रभाषायामत्यन्तं श्रमेण

1. There are number of points where Navya-nyaya appears definitely superior to Aristotelian logic. Among these are its understanding of conjunction, alternation and their negates and of the class corollary of De Morgan's law. Navya-nyaya never confuses the attribute of a class with the attribute of its members.
-Introduction of 'Materials for the study of navyanyaya logic' Page No. 2

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्याचार्यैर्न्यायतत्त्वमर्मज्ञैः कृतं व्याख्यानं महदुपकारकं स्यादिति मे दृढा मतिः।

आयत्यामपि विश्वविद्यालयस्यास्य यशस्विनोऽध्यापकाश्छात्राणामुपकारकामनया शास्त्रनिश्चयस्वरूपं विनयमाविष्कर्त्तुं साम्प्रतं दुर्लभप्रायाणां पाठ्यग्रन्थानां व्याख्यानादिमाध्यमेन प्रकाशने सोत्साहं प्रवर्त्तिष्यन्त इति समाश्वासः।

कौटिल्यदिशा ''आन्वीक्षिकीत्रयीवार्त्तादण्डनीतिश्चेति'' चतस्रो विद्याः स्वीकृताः। अत्र प्रदीपभूताया आन्वीक्षिकीविद्यायाः सर्वप्रथममुल्लेखोऽभ्यर्हितं पूर्वमिति न्यायेन विचारस्य सर्वतोऽभ्यर्हितत्वादूहनीयः। लोकसिद्धन्तावन्न्यायशास्त्रस्याभ्यर्हितत्वङ्केनापि कविना प्रकाशयता तथ्यमेव दर्शितम्-

**प्रायः काव्यैर्गलितवयसः पाणिनीयाम्बुराशेः।**
**पारङ्गस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः॥**
**वादारम्भे गदितुमनसो वाक्यमेकं सभायां।**
**प्रह्वा जिह्वा भवति कियतीं पश्य कष्टामवस्थाम्॥**

वस्तुतः न्यायशास्त्राध्ययनेन विनयसम्पन्नानां विद्यार्थिनां विदुषाञ्च तादृशमनितरसाधारणं वाग्वैभवमाविर्भवत्येव येन सदसि विषयविवेचनसन्दर्भे वाणी कथमपि न स्खलतीति निश्चप्रचम्। एवन्न्यायशास्त्रप्रवेशद्वारभूतायाः पञ्चलक्षण्याः राष्ट्रभाषयापि रहस्यं विज्ञायास्माकं विद्यावन्तश्छात्रा अपि विदुषां निवहे वादकौशलमासाद्य नयविनयसंवलिताः प्रसन्नशास्त्रार्थाः श्रीसम्पन्ना नूनं प्रसिद्धिं प्राप्स्यन्तीति नीतिसारवचनेनानेन शुभकामनामविष्कुर्वन् स्वाभिमतमुपसंहरामि -

**नयविक्रमसम्पन्नः सूत्थानश्चिन्तयेच्छ्रियम्।**
**नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः॥**
**विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति।**
**तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः॥** इति।

**प्रो० वाचस्पति उपाध्यायः**
कुलपतिः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
नवदेहली-110016

नत्वा नन्दनसूनुसुन्दरपदं स्मृत्वा गुरोरादरा-
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः।
सारल्योक्त्यतिदक्षमाथुरिकृतव्याप्तिप्रपञ्चावलि-
व्याख्यामातनुते सुधाकरसुतः तोषाय विद्यार्थिनाम्॥

# PREFACE

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय।**
**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय।।**

The importance of inference is well-known all over the world. When Lord Shree Krishna introduces himself in the Geeta as "Vada"[1] , then he makes an indication towards pure Shastric discussions. Shastric discussions enable to reach that decision which is beneficial to protect and preserve humanity and society. These discussions are more or less based on different types of inferences or Anumana. Some of the common instances of inference described in the Shastric context are mentioned below. This is to explore the actual meaning of Anumana and importance of the co-existence rule[2] or Vyapti regarding Anumana.

1. When we see black clouds in the sky during rainy days, then we infer that it may rain[3] . Similarly, when we see ants

1. वादः प्रवदतामहम्। गीता अ010 श्लो0 32 पृ0 256
2. यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः। त0सं0 पृ0 49
यत्र धूमस्तत्र तत्राग्निः इति व्याप्तेरभिनयः। साहचर्यनियमः इति लक्षणम्। त0सं0दी0 पृ0 255
3. पूर्वं कारणम्, तद्वत्, तल्लिङ्गकम्; यथा मेघोन्नतिविशेषे वृष्ट्यनुमानम्। न्या0 सू0 वृ0 पृ0 16
पूर्ववदिति-यत्र कारणेन कार्यमनुमीयते, यथा मेघोन्नत्या भविष्यति वृष्टिरिति। न्या0 सू0 भा0 1.1.5 पृ0 291
उदाहरणम्- मेघोन्नत्या भविष्यति वृष्टिरिति कारणेन कार्यानुमानम्। कथं पुनरस्य प्रयोगः? वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति, बहुबलाकावत्त्वे सति अचिरप्रभावत्त्वे च सति उन्नतत्वात्, तदन्यवृष्टिमन्मेघवदिति। न्या0 सू0 भा0 वा0 1.1.5 पृ0 295

moving in a chain, carrying their eggs, we are again able to infer the possibility of rain.

2. In the rainy season when we see flooded rivers, then we infer the fact that some where in the upper reaches, there was rainfall[4].

3. In earth there is earth-ness and because earth is also a substance (Dravyam) so in earth substance-ness also exists. Knowing this, we can infer substance-ness in earth through

---

4. अनुमानस्य त्रैविध्यं पूर्वमुक्तम्, तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात् सिद्धमित्याशयेनेदम्। अनुमानम् अनुमानत्वेनाभिमतम्, न प्रमाणं प्रमितिकरणम्, व्यभिचारहेतुकत्वात्। तत्र त्रिविधे व्यभिचारं दर्शयति, रोधेत्यादिना। नदीवृद्ध्या पिपीलिकाण्डसञ्चारेण मयूररुतेन च वृष्ट्यनुमानं त्रिविधमुदाहरणं न सम्भवति, नदीरोधाधीननदीवृद्ध्या आश्रयोपघाताधीनपिपीलिकाण्डसञ्चारेण मनुष्यकर्तृकमयूररुतसदृशरुतेन व्यभिचारात्। पिपीलिकाण्डसञ्चारस्य वृष्टिहेतुत्वाभिप्रायेणेदम्। अथवा लक्षणसूत्रे पूर्ववत् पूर्वकालीनसाध्यानुमापकम्, शेषवदुत्तरकालीनसाध्यानुमापकम्, सामान्यतो दृष्टं विद्यमानसाध्यस्याप्यनुमापकमित्यर्थ इत्याशयः। एतेन त्रैकालिकसाध्यानुमापकत्वं न सम्भवति।

परे तु पिपीलिकाण्डसञ्चारेणात्यन्तोष्मानुमानम्, ततश्च महाभूतक्षोभानुमानम्, तस्य च वृष्टिहेतुत्वात्तेन वृष्ट्यनुमानमिति वदन्ति। एवमन्यत्रापि व्यभिचारशङ्कासम्भवादव्यभिचारनिश्चयस्यानुमितिहेतोरेव दुर्लभत्वात् तत्प्रामाण्यं न सम्भवतीत्याशयः। समाधत्ते– अनुमानाप्रामाण्यं न युक्तम्, एकदेशरोधजनदीवृद्धेस्त्रासजपिपीलिकाण्डसञ्चारान्मयूररुतसदृशरुताच्च लिङ्गीभूतानां नदीवृद्ध्यादीनां भिन्नत्वान्न दोषः। न्या0 सू0 वृ0 2.1.35-36 पृ0 92-93

नायमनुमानव्यभिचारः। अनुमाने तु खल्वयमनुमानाभिमानः। कथम्? नाविशिष्टो लिङ्गं भवितुमर्हति। पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठाऽऽदिबहुलञ्चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति, नोदकवृद्धिमात्रेण।

पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते, न कासाञ्चिदिति। नेदं मयूरवासितं, तत्सदृशोऽयं शब्दः, इति विशेषापरिज्ञानान्मिथ्याऽनुमानमिति। यस्तु सदृशात् विशिष्टाच्छब्दात् विशिष्टं मयूरवासितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्। **यथा सर्पादीनामिति।**

**सोऽयमनुमातुरपराधः, नानुमानस्य; योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति।** न्या0 सू0 भा0 2.1.36 पृ093

the knowledge of earth-ness[5].

4. Every knowable object in the World can be expressed by the use of words and is at the same time, a subject matter of knowledge. Thus, if any one has cognizance of the characteristic (in an object) of being a subject matter of knowledge (Jneyatva), then it is possible to infer the presence of the characteristic of being capable of expression by words (Vachyatva). Just as Vachyatva can be inferred from Jneyatva, in the same fashion, Jneyatva can also be inferred from Vachyatva[6].

5. Every object has a defining characteristic that enables us to identify it. For example, the substance earth has a defining characteristic of smell. In this way, through the knowledge of earth's defining characteristic (smell), we can infer that 'earth is different from all things other than earth[7].'

6. In the mountains, when people see the thick line of smoke emanating from the base of the mountain, then they can infer that there is fire on the mountain[8].

7. When we see the sunset in the west in the evening and again when we see in the next morning the rising Sun in the east, then it is possible to infer that during the night there was relative movement between the Earth and the Sun[9],

---

5. सामान्यतो दृष्टं कार्यकारणभिन्नलिङ्गकम्, यथा पृथिवीत्वेन द्रव्यत्वानुमानम्। न्या0 सू0 वृ0 पृ0 16
6. अथवा पूर्वम् अन्वयः, तद्वत् केवलान्वयीत्यर्थः, यथा अभिधेयं प्रमेयत्वात् इत्यादि। न्या0 सू0 वृ0 पृ0 17
7. शेषो व्यतिरेकः, तद्वत्, केवलव्यतिरेकीत्यर्थः, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादि। न्या0 सू0 वृ0 पृ0 17
8. सामान्यतो दृष्टम्, अन्वयव्यतिरेकि, यथा वह्निमान् धूमादित्यादि। न्या0 सू0 वृ0 पृ0 17
9. सामान्यतो दृष्टम्, व्रज्यापूर्वकम् अन्यत्र दृष्टस्य अन्यत्र दर्शनमिति। तथा चादित्यस्य। तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति। न्या0 सू0 भा0 2.1.36 पृ016

All the above mentioned instances of inference rely on a specific rule of association which is called 'Vyapti' in Nyaya-Darshan. Before every inferential cognition, essentially we need the knowledge of the 'Hetu' or middle term in three phases[10] . For

---

अपरे पुनर्मन्यन्ते–सामान्यतो दृष्टम् आदित्यस्य गत्यनुमानमिति। तत्तु न बुद्ध्यामहे कथमनुमीयते इति। यदि तावत् गतिमानादित्य इति अनुमीयते, तत् केन प्रतिपद्यते? न ह्यादित्यगतेः किञ्चित् सम्बद्धं लिङ्गमस्ति। न चासम्बद्धोऽर्थोऽनुमातुं शक्यते। तथा च सर्वं सर्वेणानुमीयेत। अथापि देशान्तरप्राप्तिर्लिङ्गमिति? तन्न, अदृष्टत्वात्। न हि सवितुः कश्चित् देशान्तरप्राप्तिं पश्यति। देशान्तरं खलु आकाशदेशो दिग्देशो वा भवेत्। उभयं चाप्रत्यक्षम्। न चान्या गतिरस्ति। तस्माद्देशान्तरप्राप्तिदर्शनमयुक्तम्। सर्वत्र खल्वयमादित्यस्य मण्डलमेव केवलमुपलभते। न च वस्तुमात्रदर्शनादनुमानं युक्तम्। अपि च केनचित् प्रकारेणादित्यस्य गतिः शक्या द्रष्टुम्, उपलब्धि-लक्षणप्राप्तत्वात्। न पुनर्देशान्तरप्राप्तिर्नित्यमतीन्द्रियत्वात्। न हि कदाचिदपि प्रत्यक्षाप्रत्यक्षवृत्तिः संयोगो भवति प्रत्यक्षः। अथ देवदत्तस्य देशान्तरप्राप्ति-दर्शनेनादित्यस्य गत्यनुमानं सामान्यतो दृष्टमिति मन्यसे, न केवलमादित्यस्य सर्वार्थानां गत्यनुमानमेतत्। तर्हि भवानपि गच्छतीत्येवं कस्मात् नानुमिमीषे? नैवेदम् आदित्यगत्यनुमानं साक्षात्। किं तर्हि? देशान्तरप्राप्तिमनुमाय तया गत्यनुमानमित्यदोषः। **देशान्तरप्राप्तिमानादित्यो द्रव्यत्वे सति क्षयवृद्धिप्रत्यया-विषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात्, मण्यादिवत्। मण्यादावेतत् सर्वमस्ति। स च देशान्तरप्राप्तिमान् । एवं चादित्यः। तस्माद्देशान्तरप्राप्तिमानिति। अनया तु देशान्तरप्राप्त्या अनुमितया गतिरनुमीयते इति। देशान्तरप्राप्तिमत्त्वे वा साधनम् ( अनुमानम् )– देशान्तरप्राप्तिमानादित्यः, अचलचक्षुषो व्यवधानानुपपत्तौ दृष्टस्य पुनर्दर्शनाविषयत्वात्। देवदत्तवदिति।** न्या0 सू0 भा0 वा0 1.1.5 पृ0 296

10. तानि ते तत् पूर्वं यस्य तदिदं तत्पूर्वकम्। यदा तानीति विग्रहः, तदा समस्तप्रमाणाभिसम्बन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति। पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठते इति प्रत्यक्षपूर्वकत्वमुक्तं भवति। यदापि विग्रहः ते द्वे पूर्वे यस्येति, ते द्वे प्रत्येक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति। कतरे द्वे प्रत्यक्षे? लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यं प्रत्यक्षम्, लिङ्गदर्शनं च द्वितीयम्। **बुभुत्सावतो द्वितीयात् लिङ्गदर्शनात् संस्काराभिव्यक्त्यनन्तरकालं स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति। तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं लिङ्गपरामर्शरूपमनुमानं भवति।** न्या0 सू0 भा0 वा0 1.1.5 पृ0 292

example, if we infer fire on the mountain, then on the mountain, we first see, a thick line of smoke. This is the first phase knowledge of 'Hetu' or middle term. After seeing the smoke, we know that in this smoke there is a specific rule of coexistence with fire. This is the second knowledge phase of 'Hetu'. After knowledge of this specific rule of coexistence with fire in smoke, we become able to gain the third knowledge phase i.e. 'smoke (the Hetu in this case) being characterized by the coexistence rule (Vyapti), exists on the mountain'.

In reality this third knowledge is called inference (Anumanam or Paramarsha)[11] which is principal cause of inferential cognition or Anumiti.

---

महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम्। पक्षे यद्धूमज्ञानं तद् द्वितीयम्। अत्रैव वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम्। इदमेव लिङ्गपरामर्श इत्युच्यते। त0स0 पृ0 75

महानसे यद्धूमज्ञानं तत् प्रथमम्। पर्वतादौ पक्षे यद्धूमज्ञानं तद्द्वितीयम्। ततः पूर्वं गृहीतां धूमाग्न्योः व्याप्तिं स्मृत्वा यत्र धूमस्तत्राग्निः इति तत्रैव पर्वते पुनर्धूमं परामृशति अस्त्यत्र पर्वतेऽग्निना व्याप्तो धूम इति तदिदं धूमज्ञानं तृतीयम्। त0भा0 पृ0 111

11. लिङ्गलिङ्गिसम्बन्धस्मृतिर्लिङ्गदर्शनं वेति सन्देहः। एके तावद् वर्णयन्ति लिङ्गलिङ्गिसम्बन्धस्मृतिरनुमानमितरैर्लिङ्गलिङ्गिसम्बन्धदर्शनादिभिरनुगृह्यमाणा। अपरे पुनर्मन्यन्ते लिङ्गपरामर्शोऽनुमानमितरैरनुगृह्यमाण इति। वयं तु पश्यामः, सर्वमनुमानम्, अनुमितेस्तन्नान्तरीयकत्वात् । **प्रधानोपसर्जनभावविवक्षायां तु लिङ्गपरामर्श इति न्याय्यम् । कः पुनरत्र न्यायः? आनन्तर्यप्रतिपत्तिः। यस्मात् लिङ्गपरामर्शात् अनन्तरं शेषार्थप्रतिपत्तिरिति, तस्मात् लिङ्गपरामर्शो न्याय्य इति। स्मृतिर्न प्रधानम्। किं कारणम्? स्मृत्यनन्तरमप्रतिपत्तेः। न हि भवति यत्र धूममद्राक्षं तत्राग्निमद्राक्षम् इति। एतस्याश्च स्मृतेरनन्तरं तस्मादग्निरिति शेषार्थग्रह इति युक्तं वक्तुम्। तस्मात् स्मृत्यानुगृह्यमाणो लिङ्गपरामर्शोऽभीष्टार्थप्रतिपादको भवति।** न्या0 सू0 भा0 वा0 1.1.5 पृ0 293

ननु भवतु प्रत्यक्षद्वयपूर्वकः संस्कारोऽनुमानम्, तेनापि शेषोऽर्थोऽनुमास्यत इत्यत आह–**स्मृतिहेतुः** नानुमितिहेतुरित्यर्थः। परिहरति–**नैष दोष इति। विशिष्टज्ञानं विज्ञानम् विशेषश्च स्मृतेरन्यत्वम्,** न हीन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं स्मृतिः। तस्याः संस्कारमात्रप्रभवतया अन्यस्मादनुत्पत्तेः। तेन च ज्ञानेन स्वकारणं विशेषितम्, प्रत्यक्षसूत्रे यत इत्यध्याहारात्। तस्मादिहापि स्वकारणविशेषकं स्मृतेरन्यद्

